# चारायणीय शिक्षा

प्राक् प्रपद्ये विभुं भक्त्या सर्वलोकपितामहम्
शिक्षां साक्षात्प्रवक्ष्यामि तेनैवालं पितामहम् १

चारायणीं महाशिक्षां प्रवक्ष्याम्यनुपूर्वशः
निबोधत बुधैर्जुष्टां नित्यं वाङ्मलशान्तये २

वर्णानां चैव संख्यानं संज्ञास्थानं पृथग्विधम्
स्वराः सव्यञ्जनाश्चैव तेषां भेदमशेषतः ३

दशस्थानानि वर्णानां कीर्तयन्ति मनीषिणः
यतः प्रवृत्तिर्वर्णानां तानि मे गदतः शृणु ४

उरः कण्ठः शिरस्तालुदन्ता ओष्ठौ तु नासिका
जिह्वामूलं तु सृक्वश्च दन्तमूलस्तथैव च ५

उरः कण्ठः शिरश्चैव स्थानानि त्रीणि वाङ्मये
सवनान्याहुरेतानि सावमात्यर्थतोऽन्तरम् ६

उदात्तस्तालुगर्भश्च स्वरितः प्रचयस्तथा
नीचः सार्वानुदात्तश्च सन्नत्ते उरस्तथैव च ७

तरसा प्रयजयेन्नीचमुच्चं पृष्टादिवोन्नयेत्
नैष्यात्पञ्च भ्रुवोर्मध्ये स्वरितं शिक्षका विदुः ८

अकारप्रमुखैर्वर्णैर्हकाराः तैस्त्रिषष्टिभिः
विवद्धं वाङ्मयं सर्वमप्रमेयमपारगम् ९

अकारा औकारान्ताः स्वरा ज्ञेयाश्चतुर्दशम्
शिष्टानि व्यञ्जनान्येव प्रोक्तान्यक्षरचिन्तकैः १०

कादयो मावसानाश्च स्पर्शाः स्युः पञ्चविंशतिः
यादयाश्च तथान्तस्थाः ऊष्माणश्च शषसहाः ११

स्पर्शानां करणं स्पृष्टमन्तस्थानामतोऽन्यथा
यमानां संवृतं प्राहुर्विवृत्तं च स्वरोष्मणाम् १२

वर्गावसानगा वर्णाश्चतुः संज्ञाः प्रकीर्तिताः
नासिक्या आनुनासिक्याः पञ्चमाश्चान्त्यसंज्ञकाः १३

वर्गप्रथमद्वितीयाः शषसाश्च त्रयोदश
ज्ञेया अघोषा इत्येवं संज्ञयाक्षरचिन्तकैः १४

अघोषाणां तु करणं श्वासवत्समुदाहृतम्
नादवश्चैव सर्वेषां अकरस्तेति निश्चयः १५

अघोषे तु विसृष्टस्य परमं स्थानता भवेत्
अनुस्वारो विसृष्टश्च कलापाठः प्लुता यमाः
जिह्वामूलमुपध्मा च षोडशैते पराश्रयाः १६

अनुस्वारे तु नित्यं स्यात् द्वित्वं चारायणीयके
अलाबुवीणा निर्घोषा दन्त्यमूलस्वराननु
अनुस्वारस्तु कर्तव्यो नित्यं ह्रोः शषसेषु च १७

एकमात्रः स्वरो ह्रस्वो द्विमात्रो दीर्घ उच्यते
प्लुतस्त्रिमात्रो विज्ञेयो व्यञ्जनं त्वर्धमात्रकम् १८

ह्रस्वं द्विमात्रसंयुक्तं प्लुतमाहुर्मनीषिणः
वृद्धस्त्रिमात्रमेवापि व्यञ्जने त्वर्धमात्रकम् १९

ह्रस्वप्लुता प्रयुञ्जीत विरामेषु न नासिकान्
स्वर्लोकप्रभृतीनां तु न तु व्यञ्जनमस्तकान् २०

स्वरसन्धिस्तु सर्वेषां द्विमात्रेण विनिर्दिशेत्
ह्रस्वदीर्घप्लुतानां च यथा शास्त्रनिदर्शनम् २१

अनन्त्यश्च भवेत्पूर्वा अन्त्यश्च परतो यदि
तत्र मध्ये यमस्तिष्ठेत्सवर्णः पूर्ववर्णयोः २२

अपञ्चमस्त्वेकपदे संयुक्ता पञ्चमेऽक्षरे
यमो ज्ञेयो यथा रुक्मसंख्नग्निज्ञर्यन्ति चैव हि २३

पञ्चायुग्मा स्वरा ह्रस्वः शिष्टा दीर्घस्त्वशेषतः
तेषामेव प्लुताः स्सन्ति ॠ ॡ वर्णौ विवर्जितौ २४

विद्यादमित्यनुस्वारं जिह्वामूलं कखाश्रयम्
विसृष्टस्तु इति प्रोक्त उपध्मा स्यात्फलाश्रयः २५

अशरीरास्तु ये वर्णा विज्ञेयास्तु पराश्रयाः
अन्यं वर्णं समाश्रित्य दर्शयन्ति निजं वपुः २६

जायापत्योर्यथा योगाहुर्भं चैव प्रजायते
तथा पराश्रयो वर्णः संयोगश्च प्रजायते २७

प्राक् पदैः पर्यामाणस्तु पुरुषश्च यथा शुभम्
तथा पराश्रया वर्णा विज्ञेयास्ते पराश्रयाः
संश्रयन्ति परं तु तदिति द्वितीयः पादः २८

स्पर्शनासिक्यसंयुक्तास्तत्र मध्ये यमाः स्थिताः २९

अशरीराश्चतुर्भेदास्संज्ञाभिर्विहिताः पृथक्
प्रथमः पञ्चमैर्युक्ताः कयमं तत्र मध्यगम् ३०

द्वितीयेष्वेव खयमं तृतीये गयमं स्मृतम्

चतुर्था यत्र दृश्यन्ते वर्गान्तैः सह संयुताः
घयमस्तत्र मध्यस्थो ज्ञेयश्चारायणीयके ३१

नासा मूर्धनि संस्थानः प्रथमश्चयमः स्मृतः ३२

द्वितीयं तालुजिह्वायां नासायां तु विनिर्दिशेत्
तृतीयः कर्णदन्तं च कर्णौ नासां च संस्पृशेत्
चतुर्थो हृदयं नासां सर्वे कण्ठ्या यमाः स्मृताः ३३

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा
जिह्वामूलं च दन्ताश्च नासिकोष्टौ च तालु च ३४

अंकुहविसृष्टाः कण्ट्यास्तालु नीचुयशाः स्मृताः
मूर्धन्यृटुरषा ज्ञेया दन्त्यालृतुलसाः स्मृताः
उपूपध्मानीया ओष्ट्या तुरस्यौ हविसृष्टकौ ३५

कण्ठ्या तालु कण्ठ्योष्ट्याः संधिवर्णाः प्रकीर्तिताः
दक्स्वरः परतो यत्र हकारस्य तु दृश्यते ३६

हकारं कण्ठ्यमित्याहुरौरस्यं व्यञ्जनेन तु ३७

अवर्णश्च कवर्गश्च जिह्वामूलीय इत्यपि
नवैते कीर्तिता वर्णा जिह्वामूलसमुद्भवाः ३८

इवर्णश्च चवर्गश्च यशकारौ तथैव च
एते वर्णापरा ज्ञेया दशतालुसमुद्भवाः ३९

लृवर्णश्च तवर्गश्च लसकारौ तथैव च
अष्टौदन्त्याः परिज्ञेया दन्तमूलसमुद्भवाः ४०

उवर्णश्च पवर्गश्च वकारोष्टम एव च

उपध्मानीयसहिता ओष्ठ्या वर्णा दशस्मृताः ४१

हकारः स्वरसंयुक्तो लघुत्वं दृश्यते यदि
कण्ठ्यं तं तु विजानीयाद्धृदयेति निदर्शनम् ४२

हकारं पञ्चमैर्युक्तमन्तस्थैर्वापि संयुतम्
तमुरस्यं विजानीयादाह्वियेति निदर्शनम् ४३

यमानुस्वारनासिक्यानामामूलसमुद्भवाः
सर्वस्थानमवर्णस्य केचिदिच्छन्ति सूरयः ४४

यस्य यस्य तु वर्णस्य करणं नोपपद्यते
प्रतिज्ञा तत्र बोद्धव्याकरणं हि तदात्मकम् ४५

एते स्थानसमुत्पन्ना वर्णा षष्ठिस्त्रयस्तथा
यैरेवत्वखिलं विश्वं व्याप्तं वाङ्मयमण्डलम् ४६

सुराचतुर्दश प्रोक्ताः स्पर्शाः स्युः पञ्चविंशतिः
यादयाश्च स्मृताश्चाष्टौ षोडशैव पराश्रयाः ४७

एते वर्णास्त्रिषष्टिश्च विहिताक्षरचिन्तकैः
एतैरेवाखिलोव्याप्तो वाक्तमुद्रस्त्वपारगः ४८

सितवर्णाः स्वरास्सर्वे ईकारं स्पर्शसन्निभम्
स्पर्शान्तःस्थास्तथोष्माणः श्यामपीतारुणास्मृताः ४९

अयोगवाहाश्श्यामास्तु सिताः सर्वे स्मृताः स्वराः
अन्तःस्था हरिता ज्ञेया ऊष्माणश्चारुणप्रभाः ५०

स्पर्शा ईकारसंहिताः कृत्स्नवर्णानसंशयः
सौम्योत्रतालव्यगणो जिह्वामूलस्तु नैनृताः ५१

आग्नेयः कण्ठजश्चैव मूर्धन्यो वायुदैवतः
दन्त्यारौद्रास्तु विज्ञेया ओष्ट्याश्चैवाश्विनामताः ५२

वैश्वदेवास्तु विज्ञेयाः शेषावर्णानसंशयः
एवं वर्णाः प्रयोक्तव्या नाव्यक्ता न च पीडिताः ५३

सम्यग्वर्णप्रयोगेन ब्रह्मलोके महीयते
संहितायास्त्विमां लोकं जित्वान्तरिक्षमाप्नुयात् ५४

अयं लोकोन्तरिक्षस्य तृतीयं दिवमेव तु
जित्वे मान्क्रमपाठस्तु ब्रह्मलोके महीयते ५५

प्राक्कूलोपर्युपासीत पवित्रैश्चैव पावितः
प्राणायामैस्त्रिभिःपूतस्तत ओंकारमर्हति ५६

प्रणवं प्राक् प्रयुञ्जीत व्याहृती तदनन्तरम्
सावित्रीं चानुवचनं ततो वृत्तान्तमारभेत् ५७

वसिष्टः तपस्तप्यति योरण्ये मुनिर्मूलफलाशनः
ऋचमेकां तु यो धीते तच्च तानि च तत्समम् ५८

वेदाभ्यासोन्वहं शक्त्या महायज्ञक्रियाक्षमाः
नाशयन्त्याशु पापानि महापातकजान्यपि ५९

वेदो चितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः
तद्धि कुर्वन्यथाशक्तिप्राप्नोति परमां गतिम् ६०

यज्ञानां तपसां चैव शुभानां चैव कर्मणां
वेदधर्मो द्विजातीनां निःश्रेयसकरावुभौ ६१

निर्वृत्तपूर्णां पृथिवीं दत्त्वा यत्फलमश्नुते

तपसश्च परस्यैव तत्स्यात् वाध्यायिनि द्विजे ६२

यजूंषि शक्तितोऽधीते योन्वहंसघृतामृतैः
प्रीणन्ति देवानाज्येन मधुना च पितृंस्तथा ६३

यः स्वाध्यायमधीते वृं विधिना नियतः शुचिः
तस्य नित्यं क्षरत्येष पयो दधिघृतं मधु ६४

इति चारायणीयसंज्ञाध्यायः प्रथमः

इदानीं सन्धिप्राप्तानां वर्णानां लक्षणमाह
सन्धिप्राप्तास्तु ये वर्णास्तेषां द्विर्भाव इष्यते १

अभावे सन्धिना चैव लघुत्वं चैव निर्दिशेत्
दीर्घं विसर्जनीयां तं पदान्तं बिन्दुसंयुतम् २

संयोगस्य शृणोति दर्शनम्
एकबिन्दुरनुस्वारो विसृष्टस्तु द्वयोः स्मृतः
नतूपङ्कलपाठस्य मूर्धन्या इव दृश्यते ३

ह्रस्वपूर्वस्त्वनुस्वारो विज्ञेयो द्व्यर्धमात्रकः
अर्धमात्रस्तु पूर्वः स्याद्विपरीतो विपर्ययः ४

अनुस्वारे तु नित्यं स्यात् द्वित्वं चारायणीयके
तर्जयित्वा तु पुंश्चल्पास्तथा वै संस्कृतादिषु ५

ब्रह्मचारी च पुंश्चली तन्नौ संस्कृतम्
नरे द्वे वा हकारे वा द्विर्भावं विद्यते क्वचित् ६

न चैव जिह्वामूलीये नोपध्मानीय एव च
सूर्मीं ३ वर्णवतीं ३ यथायर्हिधिर्रूपायः कामयते ७

न चैवास्वरपूर्वे तु नान्तस्थैः स्पर्शसयुतैः
न च वर्गद्वितीये तु न चतुर्थो कदा चन ८

आद्यमन्तं च मध्यं च स्ववर्णेनैव पीडयेत्
यदवघ्रापयति हराभ्यां तु परं नित्यं क्रामयन्ति विचक्षणाः ९

तथैव जिह्वामूलीयां तथोपध्मानि निर्दिशेत्
स्वरपूचात्तु रेफात्स्यादिद्वर्भावो व्यञ्जनस्य तु १०

हकारात्तु परं नित्यं क्रमते ह्यस्वरादपि
रेफपूर्वो हपूर्वो वा यः संयोगो भवेत्क्वचित् ११

द्विरुच्यते परं तस्य घर्म्मौ ब्रह्मनिदर्शनम्
हरौ यत्र नियुज्येते हकारः क्रमते तदा १२

अह्रुतं ह्रियते ह्लादिनीं ह्रदं च निदर्शनम्
रयावुभयतो यत्र हकारो मध्यतः स्थितः १३

उभयोः क्रमणं विद्यादेतह्र्य्ग्निर्निदर्शनम्
लवरेफहकाराणां जिह्वामूलमुपध्मयोः १४

तु यत्पूर्वं तदिद्वमात्रं गुरुः स्मृतम्
ह्रस्वपूर्वस्त्वनुस्वारो द्विमात्र इति मे मतिः १५

द्विमात्र परो ह्रस्वश्च मन्यन्ते क्षरचिन्तकाः
तैलवत्पीडयेद्वर्णान्सन्धिप्राप्तांस्तु सर्वदा १६

संधिना रहितांश्चैव पर्णवच्च समाचरेत्
स्वरात्क्रामति संयोगे व्यञ्जनं व्यञ्जने परे १७

केचित्पूर्वं परं केचिदुभयोर्नोभयोरपि

संयोगो द्विविधो ज्ञेयः कृतः कृत्रिम एव च १८

कृतस्त्वेकपदे जातः कृत्रिमः सन्धिसंभवः
तत्रयस्स्यात्स्वरपरकृतो वो कृत्रिमोऽपिवा १९

तस्य पूर्वाक्षरं द्विःस्याद्यथा श्श्वोश्श्वोश्श्वमित्यपि
व्यञ्जनान्तं पदं पूर्वं तद्वर्णं चापरं भवेत् २०

द्विर्भावं तं विजानीयात्संधिकाले तु नित्यशः
तेषु स्वरावनन्तरौ यत्र संयोगसंज्ञिकौ २१

तत्र द्विष्करणं स्यात्सकृत्करणमतोन्यथा
ओष्ट्यौ वर्णौ यदि स्यातामसंयोगपरौ यदि २२

द्विरोष्टितामतैः कार्या जिह्वां पुपूष दर्शनम्
वर्णाविंशतिरेकश्च येषां द्विर्भाव इष्यते २३

प्रथमान्त्यास्तृतीयाश्च यलवाश्च षसैः सह
अन्तस्था सन्निपाते तु प्रथमं क्रामयेद्बुधः २४

अनुस्वारो विसृष्टस्तु द्वावेतावशरीरिणौ
द्विर्भावमेतयोश्चैव ज्ञेयं चारायणीयके २५

शषसहानदृश्यन्ते परस्थस्य तु नित्यशः
दीर्घानुस्वारमित्येके संयोगे ह्रस्व एव तु २६

अनस्वारस्योपरिष्टात्संवृतं दृश्यते यदि
दीर्घानुस्वारो विज्ञेयो यज्ञे २७

एते वामेव वर्णानां परं क्रामेन्नसंशयः
अन्तस्थास्पर्शसंयोगे स्पर्शस्य क्रान्तिर्दृश्यते २८

अन्तस्था सन्निपाते तु प्रथमं क्रमयेद्बुधः
यथा खल्वाश्चमे अवेव्व्लीयन्ते जल्म्मा उदरम् २९

अन्तस्थोष्म परस्पर्शसंयोगो यत्र दृश्यते
द्वित्वं स्पर्शे वदेत्तस्मिन् कल्म्माशीविश्य्यती तथा ३०

यत्र चोभयतः स्पर्शाः संयुक्ताः शषसैस्सह
आद्यस्तत्र क्रमो ज्ञेयो नापरो बोधितो बुधैः ३१

स्पर्शाः पञ्चमसंयुक्ता यत्र पञ्चममन्तगाः
संयोगसंज्ञा दृश्यन्ते तत्र मध्ये यमास्स्थिताः ३२

अपञ्चमस्त्वेकपदे संयुक्तः पञ्चमेक्षरे
यमो ज्ञेयो यथा रुक्क्म स इढ्ढग्न्निग्घ्घन्ति चैव हि ३३

शषस्तथा संयोगमनौ तु परतो यदि
यमं तत्र विजानीयात्स्न्नात्स्न्नानेति दर्शनम् ३४

वर्गवर्गचतुर्भिः स्युःपरस्मिन्पञ्चमे यमाः
शविकारच्छकारादिर्त्रयसंनतु संज्ञितम् ३५

स्पर्शा यत्र न दृश्यन्ते वर्गान्तैः सह संयुताः
यमास्तत्रनिवर्तन्ते श्मशानादिववान्धवाः ३६

वर्ग्यान्त्याछोषसैः सार्धमन्तस्थैर्वापि संयुतम्
दृष्ट्वा यमानि वर्तन्ते आदेशगमिवाधुगः ३७

उभयोरन्त्यसंयुक्तः पुमान्कुण्डलयोरिव
अयसन्तं विजानीयात्संज्ञानेति निदर्शनम् ३८

संज्ञातनोपधा दीर्घं न चानुस्वारमादिशेत्

संनियस्य ञकारेण परिक्रामे ङञौ लघु ३९

अनुस्वारं तथैकारमुपदामनुनासिकम्
विक्रोशमनुकूजं च संज्ञाने परिवर्जयेत् ४०

समा श्लक्ष्णा न संधिरधान्वर्णानुश्चारयेद्बुधः
नवैयाकरणैश्शक्यं सम्यग्वक्तुमशिक्षकैः ४१

हकारः पञ्चमैर्यत्र संयुज्येत यथा विधि
तयोर्मध्ये तु नासिक्यं पह्नोर्ह्णे ब्राह्मणो यथा ४२

न वायुं हससंयोगे नासिकाभ्यां समुत्सृजेत्
नाभ्यन्तमुरसानादं तथाहयवनेषु च ४३

हकारं स्वरसंयुक्तं लघुत्वं दृश्यते यदि
कण्ठ्यं न तु विजानीयाद्धृदयेति निदर्शनम् ४४

हकारव्यञ्जनैर्युक्तं गुरुत्वे दृश्यते यदि
तमुरस्यं विजानीयादाह्नियेति निदर्शनम् ४५

नासिकेष्वपि वर्णेषु यो यत्र भजते स्वरम्
तं तमेवोपजीवन्ति नासादोषांश्च वर्जयेत् ४६

ऋकाररेफसन्देहे यत्पूर्वव्यञ्जनं परम्
रेफं तद्धारिकं विद्यादृकारे लघु तद्भवेत् ४७

ङणनाः पूर्वपदान्तशषसेषु परेषु च
कटतैर्व्यवधीयेत्तु वर्जयेत्तच्च संयुतम् ४८

प्रथमा ऊष्मसंयुक्तापदस्थावापदादिगाः
नचैनात्प्रतिजानीयाद्यथामत्स्याः क्षरोप्सरः ४९

टशौ पशौ च संयोगे तथा स्यात्कशकारयोः
दर्शयेत्स्वतूपं तेषां द्वितीयं तु विसर्जयेत् ५०

षट्पात्रक्षराणिविरिपूशिर्नु उदयः
अनुक्शातिपदं यत्र विरिप्सिन्तु तथैव च ५१

स्वतूपे तु कपौ तत्र द्वितीयं तु विसर्जयेत्
अन्यत्र यदाद्याद‍ृग्येकपादूष्मसंयुतम् ५२

द्वितीयेत्वतु तं ज्ञात्वानुष्टुप्शारद्युदाहृतम्
तृतीयश्च चतुर्थश्च चतुर्थादिपरं पदम् ५३

त्रिषुग्घर्मः
न विकारा ञककारात्तुशकारे छागमः स्मृतः
शकारा तु छकारस्य ह्यन्येषामपिशालिनाम् ५४

अघोषे तु विसृष्टस्य परसंस्थानता भवेत्
क्षसादिच्छ परे चैव प्रकृत्यातेषु नित्यशः ५५

नक्रमेत्संस्कृतादीनां पूर्वं चैव तथा परम्
ऋगर्धर्चानुवाकादौ स्वरभंतौ तथैव च ५६

पुंश्चल्पा तु तथैवास्यातूष्मा चैवोष्मणिस्थितः
वर्णेषूक्तः क्रमविधिरेतच्चारायणेर्मतम् ५७

सर्वेषां क्रमशास्त्राणां स्वरोधिष्टानमुच्यते
नास्वरत्क्रमते वर्णो बहु प्राप्तोऽपि कारणात् ५८

द्वितीयोध्यायः

संहिताकरणं चेदमथवक्ष्यान्यतो लघु
व्यञ्जनेन क्वचित्संधिः स्वरेण स्यात्क्वचित्तथा १

तथा सनत्कुमारः

स्वरेऽक्षरमिति प्राहुराचार्याः शब्दचिन्तकाः
समुदायः पदं तेषां तच्चतुर्धा व्यवस्थितम्  २

नासिकाख्याभिके चोभे नैपातिकमनन्तरम्
उपसर्गश्च निष्पत्तिः पदमेवं चतुर्विधम्  ३

नासिकं सविता व्योम व्यर्त्त्वित्याख्यातिकं स्मृतम्
पर्युपेत्युपसर्गश्च चवाहेति निदर्शनम्  ४

नासवायव्यमैन्द्रं वा सौम्यमाख्यातमिष्यते
आग्नेयस्तूपसर्गः स्यान्निपातो वारुणः स्मृतः  ५

भारद्वाजकमाख्यातं भार्गवं नाम गोत्रतः
वासिष्ठा उपसर्गास्तु निपाताः काश्यपाः स्मृताः  ६

लोपसंधिसते लोकमुश्चन्द्रे त्यागमः स्मृतः
वज्यसीतिविकारस्तु प्रकृतिः किं स्विदित्यपि  ७

वर्णस्याद्दर्शनं लोप आगमो वर्णदर्शनम्
वर्णान्यत्वं विकारस्यात्स्वभावः प्रकृतिः स्मृतः  ८

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ
तोस्तथार्थातिशयो नियोगस्तदुच्यते पञ्चविधं निरुक्तम्  ९

ह्रस्वसंधिं तथा दीर्घं स्वरेण व्यञ्जनेन तु
चतुर्विधं यथा संधिं वक्ष्याम्य अग्निर्वै प्राङ्न चेतम्  १०

द्वौ दीर्घौ ह्रस्वदीर्घौ वा दीर्घह्रस्वावनन्तरौ
ह्रस्वयोरुभयोर्वापि दीर्घमेकं समासतः  ११

दक्षिणावर्तयति
एसंधिः स्यादकारान्तादिकारादे परे पदे
उकाराद्ये तथोभावनृवर्णे रेफसंयुतम् १२

ऋवर्णाद्यमकारान्താद्रेफत्वं यातितत्स्वरः
परेण सह संयोज्यो यथर्त्विति निदर्शनम् १३

यत्र यत्र ह्यृकाराद्यमकारान्तं परं पदम्
तत्र तत्र भवेद्रेफः परेण सहसंयुतः १४

पुनर्ग्रहणं स्पष्टार्थं संधिवर्णेष्वकारांत्तात्परेष्वेव समासतः
प्रथमाद्ये द्वितीयत्वं तृतीयाद्ये चतुर्थता एवैषापरीति १५

एवकारकरणात्क्वचिद्विद्ब्रामो दृश्यते
अपान्ते सर्शादयामीत्येवमादयः १६

इकारान्तं पदं पूर्वं स्वराद्यं चेत्परं पदम्
समासे संधयेद्यत्वमुकारान्ते तु वागमम् १७

प्रत्यक्सवरुणः स्थावरः स्रवन्ति समासतो
विवृत्तिः स्यात्संधिवर्णात्स्वरे परे ह्रस्वपूर्वामयुरमां च १८

दीर्घपूर्वमतोत्यथा नविवृत्तिरकाराद्यमेकारान्तात्परं पदम्
एकसंधिं कंचिदिच्छन्ति केचिद्विवृत्तिसंहिताम् १९

अयुग्मेषु यथासंधिरकारान्तात्स्वरे परे
युग्मेप्याहुस्तथा संधिं दीर्घश्च तदनन्तरम् २०

कण्ठा द्विसृष्टस्योभावं परे घोषेऽथ तत्परे
प्राहुर्लोपं तथा दीर्घाद्विवृत्तिः स्यात्स्वरे परे २१

नास्य ज्ञरा द्विसृष्टस्य घोषाद्ये रेफतूपता
लोपमाहुः परे रेफे दीर्घः स्याद् इउवर्णयोः २२

विसृष्टस्त्विदुपूर्वाभ्यां परो रेफो यदा भवेत्
संधिकाले तु तौ दीर्घौ रेफसंधिमतोन्यथा २३

रेफत्वकगठपूर्वोऽप्यकारान्तादीनि शेषतः
समासतः परे घोषे स्वस्थानतमतोन्यथा २४

तालुमूर्धन्यदन्त्यानां वर्गाणां प्राग् द्विकं द्विकम्
यत्र चैकपदाद्यं चेद्विसृष्टात्त्सोष्मसंयुतम् २५

पञ्चमत्वं स्ववर्गाच्च प्रथमाः पञ्चमे परे
तृतीयत्वं परे घोषे प्रथमाद्यैः स्वतूपता २६

परे स्पर्शे मकारान्तात्यर्शं स्यात्स्वान्त्यसंयुतम्
सवर्णतापरेऽन्तस्थे अनुस्वारस्तथोष्मणि २७

यज्ञेषु कत उत्वोंय्य विष्टः
अनुस्वारे परे पूर्वे सय्योगे पुरतः स्थिते २८

तद्धि ह्रस्वं विजानीयात्संस्थाप्येति निदर्शनम्
अनुस्वारोपरिष्टाश्च संवृतं दृश्यते क्वचित् २९

सदीर्घमपि विज्ञेयाद्यज्ञं शृणोति दर्शनम्
ह्रस्वोपधास्तु ङ्णनाः स्वरादेषु पदेषु च ३०

प्रत्यङ्ङासीनः सर्वत्र गुरोवो ज्ञेया लघुदीर्घोपयास्तथा
यानावहनक्रमे तु समासाङ्गे व्यञ्जनं ऋत्स्वरे परे ३१

संय्योगे क्रमते नित्यं व्यञ्जनं रेफवर्जितम्

नृषुयदन्ना व्यञ्जनान्तं पदं पूर्वं परव्यञ्जनमक्षरम् ३२

ऋवर्णेन तु संयुक्तं तत्समासेन भारिकम्
अभीष्टकान्द्यृन्दन्ति प्रथमातूष्मणाद्ये तु द्वितीयत्वं परे पदे ३३

संयुज्यं प्रथमं मध्ये नासिक्योष्मणयोस्तथा
तत्सावित्रोदयच्छत रङ्गसंधिर्नकारान्त ३४

द्विसृष्टेव सरेफता मकारान्तादनुस्वारम्
परेष्वेव रफोष्यसु द्वे पदे तु संगसंषर्वम् ३५

राट्परं यदि मागमः स्यात्तयोर्मध्ये नानुस्वारो विधीयते
सम्राट्दिशां समासे क्रमते ताल्व्यं तकारां तादनन्तरम् ३६

सयकारं च्छकारं च लकारं तुल्य एव तु
यश्चरुर्भवति तच्छान्तं मिथुनं स्वर्गाल्लोकात् ३७

पूर्वं कृत्वा पदच्छेदं समासं तदनन्तरम्
समासे तु कृते पश्चादर्थं ब्रूयाद्विचक्षणः ३८

संहितायां विधिः प्रोक्तः कवीनामनुकम्पया
पुरासकृद्बुधैर्जुष्टः सैनिकैरिव केशवः ३९

इति चारायणीशिक्षायां तृतीयोऽध्यायः

मन्त्रो हीनः स्वरो तो वर्णो तो वामिथ्या प्रयोक्तोन स्वमर्थमाह
सवाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् १

ऊतीर्थादागतं जग्धमपर्वणेषु भक्षितः
न तस्य परिमोक्षोऽस्नि पापाहेरिव दुर्द्विषां २

सुतीर्थादागतं जग्धं स्वाम्नातं सुप्रतिष्ठितम्

सुस्वरं च सुवक्त्रं च प्रयुक्तं ब्रह्मराजते ३

यथा व्याघ्री हरेत्पुत्रं दंष्ट्राभिर्न च पीडयेत्
भीता पतनभेदाभ्यां तद्वद्वर्णान्प्रयोजयेत् ४

मधुरं च नचाव्यक्तं व्यक्तं च नच निष्ठुरम्
सनाथस्ये वदेशस्य नवर्णाः संकरं गताः ५

माधुर्यमक्षरव्यक्तिः पदच्छेदस्तथात्वरः
धैर्यो गुरुलघुत्वं च षडेते पाठके गुणाः ६

प्रतर्वदे नित्यमुरः स्थिते न स्वरेण शार्दूलरुतोपमेन
मध्यन्दिनोकण्ठगतेन चैव चक्राह्वयाकूजितसन्निभेन ७

नारं तु विन्द्यात्सवनं तृतीयं
शिरोगतं तच्च सदा प्रयोज्यम् ८

वाचं स्वतन्त्री न पटेत्कदा चित्प्राज्ञोन्यथा तैर्विहितं वेदम् ९

समविक्रमसम्यत्रामदुतामविलम्बिताम्
उच्चारयेत कल्पाणीं वाचमांन्नायसारिणीम् १०

नवासरस्य पूर्वाह्ले तारमुच्चारयेत्स्वरम्
उत्साहो नश्यते तस्य रात्र्यं ते मैथुने यथा ११

पठेत्कैवल्यसोमानं सौम्येन परिवेष्टितम्
तु लाकोटिनिभं पाठं स्वराध्यं मध्यमं स्वरम् १२

स्वरात्स्वरं संक्रमयेत्स्वरे संधिमनुल्बणम्
अदिछिन्नं समं कुर्यात्सूक्ष्माच्छायोतपोरसम् १३

समं स्वरं पठेन्नित्यं मार्गं हस्ते प्रदर्शयेत्

यद्वाणी गच्छति स्थानं तद्धस्तेन प्रदर्शयेत्  १४

यथा वाणी तथा पाणिर्विस्वरं परिवर्जयेत्
यत्रैवावस्थितावाणीपाणिस्तत्रैव गच्छति  १५

स्वरस्यानुगतं हस्तं नृणामिव शुभाशुभम्
हस्तस्यानुगता दृष्टिच्छाये वानुविधावति  १६

हस्तं वागनुगं कृत्वा वाचं कृत्वा मनोनुगां
दृष्टिं हस्तगतां कृत्वा त्रैस्वर्यस्येति लक्षणम्  १७

स्वरतश्च स्वरो नीचः स्वरः स्वरित उच्यते
स्वरं प्रधानं त्रैस्वर्ये प्राहुरक्षरचिन्तकाः  १८

सुखोपविष्टश्च चिरेकचित्तो विवर्जितत्रासमदाश्रयस्तु
यथर्तु युक्त्याशनपानभोजी वेदं पठेद्वर्जितवर्णदोषम्  १९

दक्षिणाक्षिनिपातेन दृष्टिं हन्यात्कनीयसीम्
नासागण्डभ्रुवोः संधिमुदात्तविषये विदुः  २०

पुटिं ददुस्स्फुटिं वीणा मुष्टिको धनुराकृतिः
षडेते हस्तदोषास्तु परशुश्चेति सप्तमः  २१

उत्तानं सोन्नतं किंचित्सुव्याक्तां गुलिरञ्जितं
स्वरं विद्धं करं कुर्यात्प्रादेशोद्देशगामिनम्  २२

उदात्तस्तालुगर्भश्च तालुगर्भस्ततः परः
समाहारे तु स्वरितः प्रचयस्तस्य पृष्टतः  २३

नीचस्थानोनुत्तुश्च सन्नतरस्ततोध्वगः
सर्वानुदात्तुयोर्मध्ये सप्तैते स्वरउत्तमाः  २४

अन्तोदात्तं पदं पूर्वमुदात्तं वा भवेत्क्वचित्
उदात्तं परपदं स्यात्तालुगर्भः स उच्यते २५

स्वरितानन्तरं वर्णं यत्किंचित्तत्रविद्यते
प्रचयं तं विजानीयादेवमाहुर्मनीषिणः २६

उद्दयन्नाय
प्राहुस्सर्वानुदात्तुं तु नीचानीचरतस्तु यः
तत्परं चेद्भवेन्नीचमाहुः सन्नतरं बुधाः २७

स्वरितं अङ्गुलं विद्या सुच्चैर्यत्र परं पदम्
नीचं वापि पदं भूयादङ्गुले स्वरितं भवेत् २८

अग्ने सम्राडजैकपादाहवनीय
अमावस्यायां वा यजते कया शुभा २९

प्रचितं तालुगर्भं च सन्नतरं तथापि च
वाक्स्पृशति न पाणिश्च ज्ञेयं चारायणीयके ३०

चारायणीयशिक्षायां चतुर्थोऽध्यायः

स्वरा अष्टविधाः प्रोक्ता अमी वक्ष्ये यथाक्रमम्
तिर्यक्त्वं चतुरो गच्छेच्चत्वार ऋजवः स्मृताः १

सयकारं सवं वाप्यमक्षरं स्वरितं पदम्
नीचपूर्वमपूर्वं वा स जात्यः स्वर उच्यते २

सदस्यते
ए ओ आज्यमुदात्ताभ्यामकारो यत्र दृश्यते
अनुदातो ओ भिनिहितः सहं तस्मै वाजमिति ३

सोऽहं वाजसनोमि तस्मै वाजं सूवान्तम्

इ उ वर्णौ यद्युदात्तौ आपद्यते यवौ क्वचित्  ४

नीचे च प्रत्यये नित्यं विद्यात्क्षैप्रस्य लक्षणम्
अस्वकं यजामहे द्व्यन्नः सर्पिः  ५

इकारे यत्र लोपः स्यादिकारेणैव संधितम्
उदात्तं चानुदात्तं च प्रश्लिष्टोभीन्धतामिति  ६

ह्रस्वप्रकृतिरिकार ईकारोच्चनीचयोः
प्रश्लिष्टं स्वर्यते तादृग्विहीमि स्वोविभाव्यते  ७

उदात्तपूर्वं यत्किंचिच्छन्दसि स्वरितं पदम्
एष सर्वबहुस्वारस्तैरोव्यंजनउच्यते  ८

ईडे अग्निम्
अवग्रहात्परं यत्र स्वरितं स्यादनन्तरं
ततो विरामं तं विद्यादुदात्ते यद्यवग्रहः  ९

गोपतौ
उच्चनीचौ स्वरौ यत्र नीचे स्याद्यद्यवग्रहः
तथाभाव्यं विजानीयादेवमाहुर्मणीषिणः  १०

यथाधनुषमादाय शिरे क्षिप्ते पुनर्गुणः
स्वस्थानं प्रतिपद्येत तद्वदस्तगते स्वरे  ११

प्रश्लिष्टक्षैप्रजात्यानां यश्चापि नेहिते भवेत्
उदात्तोपस्थितं तेषां एकदेशे प्रकीर्तितम्  १२

न तत्स्वरितपूर्वाङ्गे नापराङ्गे कदा चन
उभयोर्वावसंयोगे द्वारं कुर्याद्विचक्षणः  १३

अन्तोदात्तं पदं पूर्वमुदात्तं वा भवेत्क्वचित्
हस्तं न नीचैर्निक्षिप्यति यंककुत्रैव गच्छति
तव श्रियव्यजिहीत   १४

पत्नी स्वः
अनुदात्तात्कम्पनं यत्र द्व्यङ्गुलं तत्र पृष्टगम्
हस्तं स्वरसमायुक्तं कम्पयेत विचक्षणः  १५

देवा अत्थोन्यस्य
स्वरितात्कम्पनं यत्र तत्राङ्गुलकमूर्धगः
हस्तं श्रुतिगतं कम्पे त्राङ्गुलादतिरेचयेत्  १६

इषिरा अनत्तिः न्यङ्गिनयन्ति अवरुह्य तथोदात्तादङ्गुलं सामेवतु
कम्पं कुर्यान्नतः पश्चाद्धस्तं तत्रैव गच्छति । अ  १७

संव्वावसोऽग्नेः
कम्पयोरुभयोर्यत्र ह्येकस्थानं कदा चन
सार्धात्स्यादङ्गुलादेकाद्द्वितीयं चाङ्गुलोर्ध्वगम्  १८

मनुष्यास्त्नेन्यतः
साधां तथाङ्गुलात्कम्पा सर्वस्थानेषु कथ्यते
स्वरज्ञाः केचिदिच्छन्ति मायाभेदाः प्रकीर्तिताः  १९

पञ्चमोऽध्यायः

यथा सौमन्तनागेन्द्रः पदात्पदं विधावति
एवं पदं पदं व्यक्तं दर्शनीयं पृथक्पृथक्  १

पदान्ते तु विरामः स्याद्बलाहक इति स्मृतः
अर्धर्चैर्वैद्युतो नामदगन्ते तु भुजं गमः  २

पदे विरमते यातसवै विशिखउच्यते

योन्यस्मिन्छन्दसि प्रोक्ताः पर्वकं तं विदुर्बुधाः
प्रतगसम् तनुमध्यं तु तद्वत्रं यस्य पादं षडक्षरम् ३

कुमारललिङ्गं सप्त ह्यष्टाक्षरमनुष्टुभं
नवाक्षरं फलयुतं प्रणवं तु दशाक्षरम् ४

एकादशोपेन्द्रवज्रं द्वादशं तु जलोद्धृतम्
त्रयोदशाक्षरपदं प्रहर्षं वृत्तमुच्यते ५

चतुर्दशाक्षरं वृत्तं वसन्ततिलकं विदुः
पञ्चदशं तु मालिन्यमृषभं षोडशां विदुः ६

सप्तादशाक्षरं पादं मन्दाक्रान्तं तु नित्यशः
अष्टादशं सुगो कर्णं शर्दूलैकोनविंशतिः ७

विंशाक्षरं सुवदनं स्रग्धरा चैक विंशतिः
द्वाविंशमभ्रतृत्तं तु सुललितं विंशतित्रयम् ८

चतुर्विंशतितत्वङ्गी क्रौंच पादमतः परम्
अष्टाविंशमश्च पादं शोभनं नवविंशकम् ९

भुजं गजृं भं षड्विंशं ततो मधुकरं परम्
योन्यस्मिंस्त्रिंशमात्पादा आर्यां वैतां निबोधत १०

अतोन्यथा भवेद्वद्यं यत्र पादेन विद्यते
यत्रकण्ठ्यदन्त्यदन्त्यष्टानामत्तं पदं तु वर्तते ११

परे पदे तथाग्रं स्यात्तद्विरामं विदुर्बुधाः
दिवसृक् ह्रुत
अक्ष्णो निमेषमात्रेण या वर्णा पृस्व धीयते १२

स एकमात्रादिद्व्भावाद्दीर्घस्त्रिप्लुत उच्यते
हृदयस्थं मण्डलं विद्यात्कण्ठे विद्यादिद्व्राणवम् १३

त्रिराणवं तु जिह्वाग्रे विसृतं मातृकं भवेत्
चाषस्तु वदत्ते मात्रां द्विमात्रां वयसो भ्रवेत् १४

शिखी त्रिमात्रां विज्ञेया एषमात्रा परिग्रहः
आकाशस्था यथा विद्युत्स्फुटिके मणिसूत्रवत् १५

एवं छेद्यं विवृत्तीनां यथा बलेषु कर्तनम्
चतसृणां विवृत्तीनामन्तरं मातृकं भवेत् १६

अर्धमात्रमन्येषामन्येषामनुमात्रकम्
उभौ यत्र दीर्घौ स्यातां व्यवधानं तु मातृकम् १७

यवा आयवा
पूर्वमग्रे तदर्धं तु ह्रस्वयोरर्धमेव च
ह्रस्वादिवत्सानुसृता वत्सानुवारिणी चाग्रे १८

पावकवत्युभयोर्ह्रस्वा
दीर्घमध्यापिपीलिका १९

चारायणीशिक्षां षष्टोऽध्यायः

प्रचितावलगातारा केशिनी धात्रिरेव च
स्वमतिपिपीलकान्वष्ट्रा वायव्यानवषृत्तयः १

तिस्रस्तिस्रः क्रमेणासां पूर्वे मध्ये तथोत्तरे
सवनेषु प्रशस्यन्ते दुतमध्यविलम्बिताः २

अभ्यासार्थे द्रुतिं वृत्तिं प्रयोगार्थे तु मध्यमाम्
शिष्याणामुपदेशार्थे वृत्तिं कुर्याद्विलम्बिताम् ३

पदक्रमेण सन्धाय यज्ञुर्धर्मेण संस्थितं
स्थानपाणिस्वरश्लिष्टं द्रुतमाहुर्मणीषिणः ४

लघ्वादिगुरुसन्धिं च स्वोछ्वासन्नं पदे पदे
मात्राकालं समं कुर्यान्मध्यमां तां प्रचक्षते ५

पदं पदं पृथक्पृथक् प्रक्रमं प्रक्रमं तु यत्
प्राणप्रमाणप्रश्लिष्टां न्यासे वृत्तिं विलम्बिताम् ६

वाद्यं चताण्डवादीनां मात्रार्थमनुवर्तते
क्रमं चैव तिरस्कृत्यशिष्याभ्यासनहेतवे ७

क्रुद्धो गुरुर्वदति यानि यदा निशिष्ये दावाग्निसूर्यसदृशानि
दहन्ति तानि चून्येव शिक्षितपदानि सुखादहानि पश्चाद्भवन्ति कुमुदा
करशीतलानि ८

इति सप्तमोऽध्यायः

वर्गाणां प्रथमा भुक्ता भुक्ताश्चैव तु पञ्चमाः
अन्तःस्थानां लवौ भुक्तौ शेषाश्चान्येऽबुभुक्षिताः १

वर्गे वर्गे द्विकं वाद्यं दशकं वर्णसंचयम्
परेषां सहयोगेन भक्ष्यवृत्तिः प्रशस्यते २

यक्ताहलिक्ष्णन् पत्नीवान्
परस्परं स्पर्शौ भुक्तौ वर्जयित्वा तु पञ्चमौ
ङकारः पञ्चमैर्यत्र भोक्तव्यं तत्प्रयत्नतः ३

रुक्ममुपदधाति वाङ्नोपधस्पति
पञ्चान्त्यैस्त्रीणि चान्तस्था पदे चैके लवद्वयम् ४

प्रागन्त्येनान्त्याश्चतुरो भक्ष्याः पञ्चदशाक्षराः

अर्वन्यज्ञः
यकारादि हकारान्तमष्टकं च परस्परम्
चतुरश्चतुरो वापित्वभक्ष्यं षोडशाक्षरम् ५

विष्वग्वातो वान्तः
तृतीयाः पञ्चमावर्ज्याः शेषाभक्ष्यास्तु वर्गिणः ६

एकपदेन नासिक्या उपनीतस्य मधिवम्
उद्गाश्वमे विरिनन्वाधे
परस्परं स्पर्शभक्ष्यास्तृतीयाः पञ्चमादृताः ७

स्पर्शा अन्तःस्थसंयुक्ता मदिरेव द्विजातिभुक्
सप्तते अग्ने युग्मदयुजौ
तृतीयश्च चतुर्थश्च ह्यन्तस्थोष्माणसंयुतः ८

सन्धिं तु पञ्चमा यत्र नवक्ष्यामीतिमे मतिः
वाचुताजिह्वामे आगतान् अन्ति ९

संप्रेष्याणां तु पिण्डानां भक्षं चारायणीयके
यकारं हरयोर्युक्तं स्फुटमन्यत्र न क्वचित् १०

हकारे तु स्फुटं प्रक्रमे कारे रेफ ऋक्स्वरे
स ह्यग्निस्तन्मनुष्येषु वीर्यमस्य तमेव च ११

स ह्यग्निः तन्मनुष्येषु वीर्यमस्पृतमसि
ज्वालापिण्डात्सनासिक्यान्स्वानुस्वारांस्तु मृण्मयान् १२

सोपभ्यान्वायुपिण्डां च जिह्वामूलांस्तु वज्रिणः
ब्रह्मोस्तं वक्षा १३

आसन्सयमं विद्ययस्पिण्डमन्यस्थेषु च दारुवत्

अन्तःस्था यमवर्जितमूर्णापिण्डं विनिर्दिशेत् १४

स्यानं पदविभागेन विक्रते पाटको जनः
एकपदे तु सम्मोहं दन्त्यतालव्ययोर्यदा १५

सविकालं छकारं तु तालव्यं विनृते जनः
सकारे दन्त्यमित्याहुरभेदे स्मृतिविभ्रमः १६

गछगछकलश्चैव यछतश्चयोरेव च
इछ ऋछ तथा ऐछ तालव्यं विन्दते जनाः १७

प्रवत्स्यन्यसुतोवत्सो निहोतासत्सिपित्सरु
पुनरुत्स्यतमाधत्स्वपुनरुत्सृष्टपीत्स्थति १८

रुरुत्समानोदित्सन्तं वात्स्येत्स्याममदित्स्यया
उत्सदतोंतित्सत्से आरथकृत्सश्चिकित्सतः १९

संवत्सरो जिघत्सेतवृत्वकाममरुत्स्म हि
नोत्स्यान्नावीतभत्सौरात्स्यकुत्सशोत्रैव वेत्स्यथ २०

उत्सादुहेनभित्सारो वरुणछत्मभित्सति
उत्सं यतोत्सं जुषस्वदन्त्याश्चाभिहितापृथक् २१

हकारं पञ्चमैर्युक्तामन्तस्थैर्वापि संयुतम्
औरस्यन्तं विजानीयात्कण्ठ्यमाहुरसंयुतम् २२

न वायुं हमसंयोगे नासिकाभ्यां समुत्सृजेत्
नात्यन्नमुरसानादं तथा हयवनेषु च २३

ब्रह्मादेवानां स्वाह्येनं वागैह्व
ऋत्स्वरः परतो यत्र हकारस्य तु दृश्यते २४

हकारः कराट्यमित्याङ्गरौरस्यं व्यञ्जनेन तु
आह्यग्रेत उरस्यन्तं विजानीयादाहृयेत निदर्शनम्  २५

हकारं स्वरसंयुक्तं लघुत्वं दृश्यते यदि
कराठ्यं तं तु विजानीयाद्धृदये तु निदर्शनम्  २६

हृदयमपि कन्द्ये हकारं पञ्चमं युक्तं मन्नःस्यैर्वापि संयुतं
तयोर्मध्ये भवेत्तु नासिक्यं प्रोक्तं तु ब्रह्मणे  २७

स्वरभक्तिर्द्विधा ज्ञेया लकारे रेफ एव च
स्वरोदाव्यञ्जनोदा च विहिताक्षरचिन्तकैः  २८

रहयोः करिणीं विद्यात्कर्विणीं रशकारयोः
लशयोर्हरिणीं विद्याद्धां त्रीतुरसकारयोः  २९

या तु हन्सपदानामसास्याद्रेफशकारयोः
अभक्ष्याक्रमवर्ज्याश्च पञ्चैताः स्वरभक्तयाः  ३०

एकपदा भवेद्यत्र स्वरभक्तिः स्वरोदया
द्विपदा चैव यादृष्टा व्यञ्जनोदा च सास्मृता  ३१

अणुमात्रं च रेफः स्याद्व्यञ्जनस्य तथैव च
स्वरस्य सार्धमात्रं च स्वरभक्तिं विनिर्दिशेत्  ३२

स्वरभक्तीः प्रपुञ्जानस्त्रीन्दोषान्वर्जयेद्बुधः
इकारं चाप्युकारं च ग्रस्तदोषान्विवर्जनात्  ३३

दर्शपूर्णमासौ वार्षुकेस्मै
यथेन्द्रनीलप्रभयाभिभूतः शुक्लो मणियान्तिर्हि नीलभावम्
तथैव नासिक्यगुणाभिभूतः स्वरोपिरङ्गत्वमुपैति कृत्स्नम्  ३४

हृदयाज्ञायते रङ्गः कांस्यवच्चैव निःसृतः
लघुश्चैव द्विमात्रश्च ददत्वेति निदर्शनम्  ३५

दधत्वार्योनर्यः
हकारे व्यञ्जनोदः स्यात् शषसेषु स्वरोदयः
शषसैर्विवृतं विम्नात्तद्धरिसंनृतं विदुः  ३६

संयोगे रशयोर्दोषः शतवत्सो निदर्शनम्
तस्य मात्रा तु हृदये अणुमात्रा तु मूर्धनि  ३७

नासाग्रेत्वणूनां माचारङ्गः सपरिकीर्तितः
न स्वरेण विनारङ्गो ङकारेण तथैव च  ३८

उभयोर्धानसंयोगाद्रङ्ग इत्यभिधीयते
रपरे रङ्गमित्याहुरघोषे मुखनासिकाः  ३९

स्वरपरे तु नासिक्यस्तनमध्यं दधत्वयोः
ऋतूं ऋतुयते भ्रातृव्यवौ स्त्रन्नते गोमा  ४०

अग्रे वर्णस्यादर्शनं लोप आगमो वर्णदर्शनं
वर्णात्पत्वं विकारः स्यात्स्वभावः प्रकृतिः स्मृताः  ४१

सन्धिश्चतुर्विधा तेषां पदानां समुदाहृतः
लोपागमविकारास्तु प्रकृतिश्चेतिनिश्चयः  ४२

लोपसन्धिः सतेलोकसश्चन्द्रेत्यागमः स्मृतः
वाजिसीतिविकारस्तु प्रकृतिः कस्विदित्यपि  ४३

तृणवेतिणत्वं विद्यात्सुषुपुषीतिषत्वयोः
राधस्योषोत्युपचारं दीर्घं च्यावयते विदुः  ४४

तृणवः सुषुपुषी
क्रियालोपं समस्कुर्वन्नन्नष्टे वर्णलोपता
एतैः षड्भिर्द्विलोपैस्तु ज्ञेयं चारायणीयके ४५

एकपदे पदार्थे च पदावग्रहजे तथा
स्थानारं भन्तकुर्वीत त्रिः प्रक्रमपदेषु च ४६

यः तं ग्रामं जयति अमागम्या इति
काटकश्च समग्रश्च हिमवान्केशवस्तथा
चत्वार्ये तान्यसंख्यानि श्रुतितो य गुहागुणैः ४७

वर्णसंज्ञास्तु संयोगः संहिताकरणं तथा
मात्रा प्रमाणं हस्तश्च स्वराः कम्पा विवृत्तयः ४८

स्वरभक्तीः पादवृत्तं वृत्ती भुक्तमभुक्तयोः
एतत्क्रमेण पूर्वोक्तमथातः क्रमलक्षणम् ४९

इत्यष्टमोऽध्यायः

द्विपदां संहितां कृत्वा विरमेत्तु पदापदं
पूर्वमुत्सृज्यसंयोज्यमुत्तरेणोत्तरं पदम् १

असितस्य तस्य ते
त्रिपदान्यवसानानि यथास्थात्त्रिपदः क्रमः
पूर्वमुत्सृज्यमेधावी प्रक्रमेत्पुनरेव तु २

देवते योजयामि
चतुष्क्रमस्तथैव स्यात्त्रिपदेन विधिः स्मृतः
पदं पदं त्यजेत्पूर्वं प्रक्रमेत्पुनरेव च ३

देवेभ्य एमेनत्
स्वरान्तानि दुदादींस्तान्स्वरसन्धिसमीरितान्
त्रिक्रमां जनयन्त्येते उभयोषत्वणत्वयोः ४

उपेपेत्र ब्रह्मणोद्धरति ऋतस्यादिच्छयथेम पाचीन् ५

सोषूणः
उकारः पदयोर्मध्ये पत्रापृक्तः परं भवेत्
सत्रिकस्त्रिक्रमो ज्ञेयस्तथैवाकारमादिशेत् ६

उदुत्यं यत्र त्वेव समेयातां हेतूत्रिक्रमकारकौ
अन्ययोः पदयोर्मध्ये सचतुष्कचतुष्क्रमः ७

सपुनरैमीत्येद्व्रह्मस्य पदात्तेषु प्रग्रह्याणामित्यकारो निदर्शनम् ८

न क्रमस्यावसाने तु न च स्यात्सहितां प्रति
उर्वीरोदसी ऋगर्धर्चानुवाकां तास्तथाप्येकपदं च यत् ९

विसंहितमसन्धेयं संहारः केवलाः स्मृतः
अनुदृश्यामजंतकवयः
अनुदात्तं पदं पूर्वं सुरायुश्चैः परं पदम् १०

प्रक्रमे संध्यमानानां उच्चैः करणमादिशेत्
जात्यादीनामशेषाणां तिर्यक्प्रक्रमणं स्मृतं ११

अनन्यपूर्वमेतेषां उदातादेवनिर्दिशेत्
स्वरितं परैर्फलैर्पदं स्यादृजुः प्रक्रामयेद्बुधः १२

परमे व्योमन् पत्नीसरोह्वाव
स इत्येतत्तथापूर्वमित्यदंततः परम्
स्वरादिना तृतीयेन क्रमं तत्र विनिर्दिशेत् १३

सेच्चैव तु तथा स्यातामुपदे परतः स्थितः
सन्धिना तु यथोक्तेन तं चतुष्क्रममादिशेत् १४

द्विपदं प्रक्रमात्पूर्वं परयोंऽगिरसः परम्
त्रिक्रमं वालखिल्या वै माषकुम्भ्यां चतुष्क्रमम् १५

पुनरुक्तपदे पूर्वे परिहारं तु वै भवेत्
कृत्वा प्रक्रमसन्धिं तु संहरेत्विचक्षणः १६

देवावास्तोस्वाहेति
अतोन्यत्र तु संधायपुनरुक्तपरे पदे
द्विपदं त्रिपदं कुर्यादुक्तप्रक्रमलक्षणम् १७

सवितोन्नयतु
प्रक्रमेषु यथाशास्त्रं लक्षणं विहितं क्रमात्
वेष्टेष्वेव तु संधीनामत ऊर्ध्वनिगद्यते १८

षत्वणत्वमुपारो दीर्घत्वं तश्चतुष्टयम्
पदे यस्मिन्निवर्तेत तत्समायाद्यलक्षणम् १९

नवमोऽध्यायः

वेष्टापरिग्रहश्चैव संहारश्च विवर्ततः
आदरः परिहारश्च शब्दाः पर्यायवाचकाः १

अवग्रहं समापाद्यं प्रग्रह्यं नैधनानि च
संयोज्य पुनरावृत्तिः परिहार्याणि शास्त्रतः
सुषुपुषी उर्वी इति २

परिहारे विधिं विद्यात्संयोज्यभ्यास्यते
पुनः इत्यन्तां संहितां कृत्वा पदवत्पुनरारभेत् ३

प्रप्रायमग्निः प्रप्रेति प्रप्र
अकारान्तं पदं यत्र दीर्घं वा यदि वाप्लुतम्
एसन्धिस्तत्र कर्तव्यः परिहारेषु नित्यशः ४

प्रदातारं सुगावाः उपयाम इति
सन्धिवर्णेषु शेशेषु विवृत्तिः स्यात्स्वरे परे
उकारान्तं वकारः स्यादिकारे ईत्वमादिशेत् ५

अंहोमुचे अनुमत्या अष्टाकयलः
न त्यक्षराद्विमृष्टस्तु रेफं कुर्याद्विवर्तने
आवर्वरितिरे ह्येते कणठचपूवास्तु नित्यशः ६

मयो भूर्वातः वेन आवः
यत्त्वा ह्येते भुवो ह्येको ज्ञेयो रेफविवर्जितः
अन्ये सरेफः कर्तव्या भुवशब्दाः प्रयत्नतः ७

ऋतावायज्ञियो भुवः अकारात्तु पुनः रौयातः ८

स्वर्भुस्त्वहरहर्कः
दोषावस्तरजीगर्तः प्रणे तस्सन्नतस्तथा
उद्गातः प्रातरुन्नेतर्होतनेष्टस्तथैव च ९

द्वारविभरजागश्च द्वारभाः सन्नतस्तथा
एते पदा विशेषाः स्युः पृथक् तेन समुद्धृताः १०

रेफतः परिहार्याः स्युः नित्यं चारायणीयके
अवग्रहं समापाद्यं प्रगृह्यं नैयनानि च ११

आदरं पदवर्णैस्तु ऋते दुरोहणाकैदिति
अश्ववन्तं वर्धनतत् दूरोहणम् १२

विनते षत्वणत्वे तु कण्ठ्यव्यवहितौ यदि
पृथगेकपदे तौ तु न तत्रादरमादिशेत् १३

शुक्तं विषजन्ति अयः प्रणयते
स्वपन्तौ रेफलोपः स्यादुपद्या स्यात्परिग्रहे १४

स्वर्षायन्तु सकारेण गुरुणाश्वविनिर्दिशेत्
ऋते दूरोहणादेव निवृत्तानामतः परम् १५

नैधनावग्रहे स्यातां तौ तु ज्ञेयौ यथापदम्
दुन्दुभः प्रथमान्तं पदं यत्र तृतीयत्वं परिग्रहे १६

पञ्चमा अविकाराः स्युरेवमाहुर्मणीषिणः
यज्ञमानुषक्
सर्वेषां तु स्वरादीनां यकारे स्याद्विवर्तनम् १७

इकारे ह्रस्वदीर्घेन सवर्णे नैव निर्दिशेत्
ऋतवत्पृतवा इहो इतौ १८

इतिकारपरान्सर्वान्संयुक्तान्क्रामयेद्बुधः
असंयुक्तमिकारेण नक्रमन्ति छवर्जिता इति १९

कारपरा स्वसामितिस्वसां छायमिव
मोक्षपूर्वेऽनुवाकान्ते प्रक्रमान्ते तु सारणां २०

तौ तु नीचावसानौ चेत्पूर्वे चैव विनिर्दिशेत्
यदक्षरं त्यजेत्मोक्षं पदकाले तु नित्यशः २१

तदेवादर्शयेत्पाठं नीचस्थे ग्रहणे पदे
इति कारपदं मोक्षं स्वराद्यं ग्रहणं पदं २२

अन्त्यवर्णं पुरस्कृत्य पूर्ववर्णे विनिर्दिशेत्
हन्यमाने पदे नीचे पूर्वाङ्गे विनिहन्यते २३

पदवन्नीचपूर्वे स्यान्नीचः स्यादुच्चपूर्वके
मोक्षान्ते स्वरिते त्यर्थे वर्णशेषाद्विमोक्षणम् २४

अनुसंधाने पराङ्गे पदववच्च निहन्यते
मोक्षान्ते द्विपदं वर्णं साधारत्वे स्थितं यदि २५

ग्रहणं तं विजानीयात्तत्पूर्वे मोक्षणं भवेत्
मोक्षग्रहणसंधाने स्यन्दनं दृश्यते यदि २६

स्यन्दनं सारणं कुर्यात्तत्पूर्वे मोक्षणं भवेत्
स्वरिताद्ग्रहणं नीचं पादशेषाद्विमोक्षणम् २७

पदवन्नीचपूर्वः स्यान्नीचे स्यादुछपूर्वके
मोक्षान्ते स्वरिते वोच्चं सुराद्यं ग्रहणं पदम् २८

उच्चस्थं वापि नीचस्थं वर्णशेषाद्विमोक्षणम्
एकारान्तं पदं मोक्षं स्वराद्यं ग्रहणं पदम् २९

एकारे मोक्षणं कुर्यादकारे ग्रहणं तथा
सविसृष्टभुवो मोक्षामकाराद्यं परं पदम् ३०

विसृष्टे मोक्षणं कुर्याद्वर्णे वर्णशेषं विवर्जयेत्
मोक्षणादुश्चकं गच्छेद्वर्णमाद्ये परे पदे ३१

द्वितीयं ग्राहयेद्वर्णं मोक्षकाले तु नित्यशः
पुनरुक्तावसानं तु स्वरिते दृश्यते यदि ३२

ग्रहणमनुदात्ते चेदुदात्ते मोक्षणं भवेत्

अन्तोदात्तादिसर्वेषां वर्णादिस्मरणं भवेत्  ३३

द्विरुदात्तं तथाद्यं च द्वितीये चैव निर्दिशेत्
ब्रह्मचारी स्वचरिते मेधावे कर्मकृत्तथा  ३४

प्रियश्च धनदश्चैव यश्च विद्यां प्रयछति
श्रोत्रियः शुश्रूषणश्च श्रद्धावान्प्रश्नकृत्तथा  ३५

दमशमसमायुक्तस्तीर्थान्येतानि ब्रह्मणः
पृथिवीं वित्तपूर्णां त्रिर्दत्त्वा यत्फलमश्नुते  ३६

परस्य तमसश्चैव ततवाध्यायिनिद्विजे
केचित्सांख्ये नगच्छन्ति केचिद्योगेन योगिनः  ३७

केचिदेव महात्मानः क्रमस्याध्ययनेन तु
सर्वशास्त्रविदो ये च ये च क्रमविदो जनाः  ३८

एकार्थभावोपगतास्ते हरिं प्रविशंति वै
षट् पञ्चाशत्प्रथमे वै त्रिंशच्छ्लोकाद्वितीयके  ३९

तृतीये त्रिंशच्चैवोक्ता एकेनोनाश्चतुर्थके
षट्त्रिंशत्पञ्चमे प्रोक्ताः सप्तचत्वारमेव हि  ४०

चत्वारिंशत्त्वष्टमे वै नवमे तु त्रयोदश
चत्वारिंशत्तु दशमे श्लोका वै परिकीर्तिताः ४१

एकत्रैव तु विख्यातं श्लोकानां तु शतत्रयम्
चत्वारिंशदधिकं वै शास्त्रं चारायणीयकम्  ४२

अमत्सर इदं देयं मत्सरे न कदाचन
मत्सरे तु भवेद्दत्तं त्युप्तं बीजमिवोषरे  ४३

य इदं पठते नित्यं यश्चाध्यापयेद्द्विजम्
अस्यार्थं बुद्ध्यते यो वै ब्रह्मलोकं स गच्छति ४४

इति चारायणीयशिक्षायां दशमोऽध्यायः